र्मधारय इति परे ; पक्षे करिकरक्षोभः गजशुण्डाविलोलनम् । प्रता-रणं वञ्चनं प्रकर्षेण तारणं कुलान्तरनयनं च । बिन्दुः दन्तक्षतविशे-षः, वयोवस्थासूचको बिन्दुश्च । निष्कमूल्येषु पटेषु लालसा । श्या-मा यौवनमध्यस्था, रात्रिश्च । वसुमान् सूर्यः, धनिकश्च । रुचिरा म-नोहरा, तन्नामा वृत्तविशेषश्च । इन्द्राणी इन्द्रस्य पत्नी, आलिङ्गनभे-दश्च । नवः आसवः मद्यम् । विरोधपक्षे न वासवासक्तेति च्छेदः ॥

२०१. **कुपितेति** । वृत्तानि वर्तुलानि, वृत्तं आचरणं च ॥

**यस्या इति** । चन्द्रः स्वर्णं हिमकरश्च ॥

२०२. **यस्या इति** । लटहा मनोज्ञा समर्थेत्यर्थः । निर्मा-ल्यं भुक्तोज्झितं माल्यम् । शैलूषी नटी । सताम् अरसेति च्छेदः : पक्षे सह तामरसैर्वर्तत इति तादृशी ॥

२०५. **तदन्विति** । कर्करी वस्त्रनिर्णेजनाय उपयुज्यमाना स्वल्पवारिधानिका । कादम्बिनी मेघमाला, कादम्बाः कलहंसाः तद्वती च । शिवा मङ्गलकरी, पार्वती च । वयः प्राणिनां कालकृताव-स्थाविशेषः, वयांसि पक्षिणश्च । शैवलेन जलनील्या असिता नीला : पक्षे शैवैः शिवभक्तैर्लासिता । धार्तराष्ट्राः हंसविशेषाः, धृतराष्ट्रापत्यानि च सिन्धुराजः । नदीपतिः समुद्रः : पक्षे सिन्धुराणां गजानां आजः क्षपणम् ॥

२०७. **अनन्तरमिति** । पञ्चधाराः आस्कन्दितम् , धौरितकम् , रेचितम् , वल्गितम् , प्लुतम् । सदा खुरेण चिता गतिर्यस्य तम् ; पक्षे सदा आखुना मूषकेण रचिता गतिर्यस्य तम् । मुखरः

शब्दायमानः कविकायाः खलीनस्य अन्तः यस्य तम् । पक्षे सुखरैः कविभिः कान्तम् । जन्यं युद्धम्, पक्षे जनिः जन्म तस्यै अहितम् । भस्मवत् भस्मना च धवलो विग्रहो यस्य तम् । देवमणिः आवर्तविशेषः, कौस्तुभश्च । धारा सलिलधारा, अश्वगतिपञ्चकं च । पर्याणं अश्वपल्ययनम् ॥

२०९. **तत इति** । अनुभावः महिमा । छाया अनातपः, कान्तिश्च ॥

२१० **प्रतिकवीति** । बाणमयूरसुबन्धुशब्दाः तत्तन्नामप्रसिद्ध-कविवाचकाश्च । अर्थान्तरं तु सुगमम् ॥

**जयतीति** । कविमात्मानं मन्यत इति कविंमन्यः । खद्योतः सूर्यः, ज्योतिरिङ्गणः । कीटमणिः खद्योतः ॥

**सुगुणेति** । स्वमेव स्वयं वक्तीति भाति ॥

**गाथा इति** । तथागताः सौगताः । सत्रा सह । भूम्नां महिम्नाम् । कद्वदाः गर्ह्यवादिनः । 'रथवदयोश्च' इति कोः कदादेशः ।

**इति चतुर्थ उच्छ्वासः ।**